# *श्री गरुड दण्डकम्*

श्रीमते निगमान्त महादेशिकाय नम:
श्रीमान् वेङ्कटनाथार्य: कवितार्ककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

नम: पन्नग नद्धाय वैकुण्ठ वश वर्तिने ।
श्रुति सिन्धु सुधोत्पाद मन्दराय गरुत्मते ॥ 1 ॥

गरुडमखिल वेद नीडाधिरूढं द्विषत्पीडनोत्कण्ठिताकुण्ठ वैकुण्ठपीठीकृत स्कन्धमीडे स्वनीडागति प्रीत रुद्रा सुकीर्तिस्तनाभोग गाढोपगूढस्फुरत्कण्टकव्रात वेध व्यथा वेपमान द्विजिह्वाधिपाकल्प विष्फार्यमाण स्फटावाटिका रत्न रोचिश्छटा राजि नीराजितं कान्ति कल्लोलिनी राजितम् ॥ 2 ॥

जय गरुड सुपर्ण दर्वीकराहार देवाधिपाहार हारिन् दिवौकस्पति क्षिप्त दंभोलि धारा किणाकल्प कल्पान्त वातूल कल्पोदयानल्प वीरायितोद्यच्चमत्कार दैत्यारि जैत्रध्वजारोह निर्धारितोत्कर्ष संकर्षणात्मन् गरुत्मन् मरुत्पञ्चकाधीश सत्यादि मूर्ते न कश्चित् समस्ते नमस्ते पुनस्ते नम: ॥ 3 ॥

नम इद मजहत्सपर्याय पर्याय निर्यात् पक्षानिलास्फालनोद्वेल पाथोधि वीची चपेटाहतागाध पाताल भांकार संक्रुद्ध नागेन्द्रपीडासृणी भाव भावस्वन्नख श्रेणये चण्ड तुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रया तुभ्यं अध्यात्मविद्या विधेया विधेया भवद्दास्यमापादयेथा दयेथाश्च मे ॥ 4 ॥

मनुरनुगत पक्षि वक्त्र स्फुरत्तारकस्तावकश्चित्रभानुप्रिया शेखरस्त्रायतां नस्त्रिवर्गापवर्ग प्रसूति: परव्योम धामन् वलद्वेषिदर्पज्वलद्वालखिल्य प्रतिज्ञावतीर्ण स्थिरां तत्त्व बुद्धिं परां भक्तिधेनुं जगन्मूल कन्दे मुकुन्दे महानन्ददोग्ध्रीं दधीता मुधाकामहीनां अहीनामहीनान्तक ॥ 5 ॥

षट्त्रिंशद्गण चरणो नर परिपाटी नवीन गुंभगण: ।
विष्णुरथ दण्डकोऽयं विघटयतु विपक्ष वाहिनी व्यूहम् ॥ 6 ॥

विचित्र सिद्धिदः सोऽयं वेङ्कटेश विपश्चिता ।
गरुडध्वज तोषाय गीतो गरुड दण्डकः ॥ 7 ॥

॥ इति श्री गरुड दण्डकः समाप्तः ॥

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥